॥ श्रीः ॥

॥ श्री श्रीनिवासपरब्रह्मणे नमः ॥

श्रीमीमांसार्णव-मीमांसाकेसरि-पूर्वोत्तरतन्त्रप्रदीप-पण्डितराजप्रभृत्यनेकविरुदालंकृतैः

एम्. ओ. एल्. इत्युपपदभूषितैः

## डि. टि. ताताचार्यमहोदयैः

अनुगृहीतम्

# ॥ अभिनन्दनपत्रम् ॥

---

इह प्रकाश्यमानाः काव्यकृतयो वेदतदङ्गोपाङ्गात्मकविविधविद्याविहारभूमित्वेन, कुलक्रमागतज्ञानवैराग्यानुष्ठानसंपत्समेधितब्रह्मवर्चसोज्ज्वल नित्यसूरिनिभमहाश्रोत्रियश्रेणीनिरन्तर-निवासत्वेन च विख्यात श्री "नावल्पाक्क" अग्रहाराभिजनस्य, अव्यवहितपूर्वविदेशसंवत्सर-शतकमध्ये भुवमलङ्कृतवतः, अप्पा वेङ्कटाचार्य इति शोभनाभिधानभाजः कवितल्लजस्य प्रतिभाकल्पलतोन्मीलिताः सुकुमाराः कुसुममञ्जर्यः। प्रसन्ना मधुरा ओजस्विनी शब्दार्था-लङ्कारपुष्कला रसभावस्यन्दिनी चात्र शैलीति पठतां सुधियां स्वानुभवसिद्धमेतद्भवति। नाटकान्तं कवित्वमस्य कवेः कन्दर्पदर्पणभाणः प्रथयति। शब्दचित्रं अधमकोटौ गणयन्ति। परन्तु, तत्र निपुणाः कवयोऽतिविरलाः। शब्दचित्रनिबन्धननैपुण्ये सत्येव अर्थचित्रेऽपि ये कुशला भवन्ति, ते विरलतराः। अयं तु कविः उभयत्र प्रगल्भत इति नानाविधा नाना-विषयाश्च इमाः कृतयः स्फुटमवगमयन्ति।

अमुद्रितपूर्वाणां एषां काव्यानां मुद्रणप्रकाशनाभ्यां इमानि अत्यन्तविनाशाद्रक्षन्तः श्रीतञ्जापुर सरस्वतीमहाशालानिर्वाहधूर्वहाः विद्यारसिकस्य सर्वस्य लोकस्य निकाममभिनन्दनीया भवन्ति॥

तिरुपति, 20—2—67
पराभव-कुंभ-शुक्लैकादशी

दे. ति. ताताचार्यः

श्रीः

श्रीमते हयग्रीवाय नमः

# भूमिका

इदमिदानीमुपह्रियते गीर्वाणवाणीसरसकवितारसास्वादप्रवणानां सहृदयानां पुरस्तात् * "श्री वेङ्कटाचार्य कृतय" इति। सत्स्वपि प्रत्येकं विभिन्नेषु प्रबन्धविनिर्मितेषु तत्तन्नामसु, सर्वस्याप्यस्य सामस्त्येन व्यवहारमिच्छद्भिरस्माभिः प्रबन्धनाम्नैव व्यपदेशः क्रियते सौकर्याय। कविवरैरेभिर्दत्तानि तु शीर्षकाणि तत्तत्स्थाने यथायथं दत्तान्येव सन्ति॥

मद्रप्रान्ते उत्तरार्काट्मण्डले आरणिनगरसमीपवर्तिनि "सत्यविजयनगर" नाम्नि पुण्यदेशे प्रादुर्भूतेयं कृतिः, तत्रत्याभिर्बह्वीभिर्मातृकाभिस्सह तञ्जावूर् सरस्वतीमहालग्रन्थालयं समासदत्॥

सत्यविजयतीर्थाभिधानां उत्तरादिमठाधीश्वराणां मध्वाचार्यवर्याणां नाम्ना प्रथितमिदं "सत्यविजयनगरं" तच्छिष्याणां माध्वानामेव अखण्डश्रोत्रियग्रामतया स्वभूतमासीत्। ते च "जागीर्दार्" अथवा "जमीन्दार्" इति व्यपदिश्यमानाः स्वयं शास्त्रकाव्यादिसारस्यवेत्तारः तथाविधान्तर्वाणिजनपरिपोषणेऽपि निसर्गादेव प्राप्तरुचयोऽभूवन्। तेषामन्यतमस्य श्रीतिरुमलरायप्रभुवरस्य प्रियसुहृत्तमा एवैतत्प्रबन्धप्रणेतारः श्रीवेङ्कटाचार्याः। तस्यैव च काले तस्यैव प्ररोचनावशात् इमाः कृतयः प्राणायिषत। अयमंशः तत्तत्र श्लोकेषु कविनैव विवृतः। अद्यत्वे च राजकीयैः क्रियमाणे "इनाम् दूरीकरण" व्यवसाये संलग्नमिदं नगरमपि। तत्रत्या जागीर्दार् वंशीयाः स्वपूर्वपूरुषा इव कलारसिका विद्वांसश्च सन्तः सन्त्यज्य सर्वस्वं क्वापि बहिः प्रयास्यन्तः स्ववशे स्थितान् मातृकारूपान् ग्रन्थान् संरक्षितुकामाः सरस्वतीमहालग्रन्थालयाय प्रायच्छन्। तासामन्यतमैवेयमिदानीं प्राकाश्यं नीयते। अन्या अपि सुरक्षिता विलसन्त्यत्र॥

आरणिनगरादानीतासु मातृकासु इयमेका इयदवधि अमुद्रिता सहृदयहृदयंगमा चेति सद्योऽस्या मुद्रणे प्रावर्तिष्महि। देवनागरीलिप्यङ्किता तनुतरकाकलपत्रात्मिकेयं मातृका स्वलेखकमहाशयमधिकृत्य न कञ्चिदपि विषयमाविष्करोति। लेखनसंप्रदायेन, तत्रतत्र दत्तेन शीर्षकेण च महा-

---

* T. M. S. S. M. No आरणि जागीर् मातृका 398; Copied Vol no. 1368.

राष्ट्रभाषाभिज्ञः सः इति, सैव तस्य मातृभाषेति च अभ्यूहितुमस्त्यवकाशः। मातृकावसाने शून्यानि बहूनि पत्राणि सन्ति। एतत्कविप्रणीता अन्येऽपि केचिद्विषया मन्ये तेषु लिलेखिषिता अभूवन्। केनापि हेतुना ते न व्यलिख्यन्तेति ज्ञापयतीवेदम्। स्वयं विद्वानयं लेखकः द्वित्रेष्वेव स्थलेषु प्रमाद्यति। स च प्रमादो महाराष्ट्रभाषाभाषितृत्वनिबन्धन इति तत्पठनेन ज्ञातुं शक्यते॥

मातृकायां विद्यमानं क्रममनादृत्य विषयाणां मुद्रणं कृतमस्माभिः। तत्रेदं कारणं— प्रथमतः सामस्त्येन सर्वेषां विषयाणां मुद्रणं न चिकीर्षितमासीदस्माकं, अपितु कतिपयानामेव। प्रातिस्विकविषयानुपेक्ष्य साधारणविषयाः परं प्रचिकाशयिषिता आसन्। तथा 'हयग्रीवनक्षत्रमालिका" स्यं यङ्लुगन्तश्लोकात्मकं स्तोत्रं चिराय उद्यानपत्रिकायां तत्संपादकमहाशयैः सुगृहीतनामधेयैः श्री उ. वे. पण्डितराज डि. टि. ताताचार्यवर्यैः प्रकाशितम्। "वैशाखोत्सववर्णना" ख्यो भागश्च ग्रन्थलिप्यां पृथगेव पुस्तकात्मना मुद्राप्य प्राकाश्यं नीतः। इदमुभयमप्युपेक्षितव्यमस्मिन्मुद्रणे इति मतिरस्माकमासीत्। अतो मुमुद्रापयिषितेषु कतिपयेषु "लक्ष्मीशतक" स्य प्राथम्यमाश्रितम्। पश्चात्तु मुद्रितयोरपि द्वयोर्दौर्लभ्यात्, कविताचारुत्वातिशयस्य सर्वत्राविशिष्टत्वात्, सर्वासामदसीयकृतीनामेकपुस्तकात्मना प्रकाशने औचित्यातिशयाच्च सर्वेषामेव भागानां प्रकाशने प्रावर्तामहि इति॥

सकलकलापारदृश्वनामपि प्रबन्धृणामेतेषां "महावैयाकरणा" इति प्रसिद्धिरासीत्। वाचकमहाशया नूनं संवदिष्यन्ति कतिपयश्लोकपठनेनैवात्रेति निश्चप्रचम्। अतो गभीरतरमिमं शब्दार्णवमसहायतया अवगाहितुमुपक्रान्तवतामस्माकं हृदि तदात्वे नैसर्गिकं भयं प्रादुरभूदिति तथ्यमावेद्यते। चन्द्रग्रहणप्रवृत्तो बालक इव "नच खलु परिभोक्तुं नापि शक्नोमि हातुं" इत्यस्थां स्थितौ वर्तमानानामस्माकं समुत्तेजनेनाभयप्रदानमाचरितं, प्रातःस्मरणीयैरस्मदाचार्यवर्यैः श्री उ. वे. तिरुमलै चतुर्वेदशतक्रतु नावल्पाक्कं विद्वान् अय्या. देवनाथताताचार्यमहाशयैः। प्रकृतिसिद्धेनास्मदीयाज्ञानान्यथाज्ञानादिना चारुतरस्यास्य प्रबन्धस्य यथा न वैरूप्यं प्रसजेत् तथा तैरनुगृहीतमिति साञ्जलिबन्धं विज्ञापयन्तो नित्याधमर्णा वयं तावत्येव विरमामः॥

एतत्प्रबन्धनिर्मातृमहाकविपौत्राः, सर्वथा तदन्यूनज्ञानानुष्ठानादिसंपन्ना एते स्वपितामहीयकविताप्रकाशनसाहाय्यकरणं स्वस्यावश्यकर्तव्यमित्यपि प्रतिसंदधानाः, न केवलमेतावति विशश्रमुः, अपित्वस्मत्प्रार्थनामूरीकृत्य एतत्प्रबन्धृमहाकविचरितमपि संक्षेपतो विलिख्य प्रददुः। तदप्यत्र प्रकाशितं विराजते। कविवराणामेतेषामवतारकालः, विद्याभ्यासादिकं, अवसानकालः इत्यादिकं तत्र एवावगन्तुं शक्यमिति नास्माभिस्तत्र व्याप्रियते॥

तिरुमलै चतुर्वेदशतक्रतु नावल्पाक्कं श्री उ. वे. अय्या देवनाथताताचार्यैरनुगृहीतं

(अय्या) वेङ्कटाचार्यचरितम्

अस्ति खलु तुण्डीरमण्डले काञ्च्या दक्षिणतः त्रियोजनदूरे नावल्पाक्काभिधानः श्रोत्रियाग्रहारः, यत्र वसतामनन्यानामनुदिनमतिपावनात्मधारणौपयिकपरमभोग्यनिजरूपदर्शनदानाय योगक्षेमविधानाय च भगवान् श्रीवेङ्कटनाथ एव दृष्टिप्रियेण रूपान्तरेण श्रिया सह सदा सन्निदधानो रामानुजसरस्तीरे कल्पतरुकल्पो जागर्ति । यमेवमाहुः ----

शतसवनविधातुर्धाम्नि जम्बूमनाम्नि
श्रितजनबहुमान्यां मूर्तिमन्यां दधानः ।
जयति वृषगिरीशः श्रीमहीभ्यामुपेतः
परम इव पदे स्वे सूरिभिर्दृश्यमानः ॥ इति ।

तत्र श्रीनाथयामुनादियोगीन्द्रकुलमूले श्रीशैलपूर्णकुले, पारिजातनाटकाद्यनेकप्रबन्धप्रणयनविश्रुतवैदुष्यशतमखचतुराम्नायश्रीकुमारतातदेशिकपुत्रप्रपौत्रस्य श्रीवेदान्ताचार्यस्य, कलौ एकविंशत्युत्तरनवशत्यधिकचतुःसहस्रसंख्यातविक्रमसंवत्सरे (4921-कल्यब्दाः) श्रावणरोहिण्यां (30 or 31 August 1820 A. D.) श्री वेङ्कटाचार्यनामा पुत्रस्समजनि ॥

तस्य बाल्य एव पितृवियोगेन लक्ष्मीनाम्न्या मात्रा केवलमभिरक्षणात्, तदीयवात्सल्याभिव्यञ्जकासकृदाह्वानविशेषनिबन्धनं "अय्या" इत्यभिधानान्तरमेव प्रसिद्धमभूत् । स च यथाकालं यथाविध्युपनीतो मेधातिशयादचिरेणैव कालेन प्रायेणाधीतसाङ्गवेदसामान्यशास्त्रः काञ्चीमधिवसतो दिवाप्रदीपवेङ्कटाचार्यस्य तनूजां लक्ष्मीनाम्नीं कन्यकां परिणीय, श्वशुरसविध एव कञ्चित्कालमवस्थाय, सामान्यशास्त्रेष्ववशिष्टांशमपि गृहीत्वाऽनितरसाधारणप्रतिभाविभवादखिलविद्वत्कविजनमाननीयो बभूव ॥

तत्र कदाचिद्वैशाखोत्सवसमये नानादेशेभ्यस्समागतानां विद्वद्वराणां संसदि समागत्य महीशूरपुर श्री रामाशास्त्रिवराभ्याशसमभ्यस्ततर्कशास्त्रक्रोडपत्रेषु, स्वपरिचितानुगमप्रकारवेदननिपुणस्वसमानपुरुषान्तरदौर्लभ्याभिमानिषु श्री विजयराघवाचार्यप्रभृतिषु स्वशिक्षितानुगमपत्रिकां प्रकाश्य, "एतदर्थवेदनार्हः किमस्त्यत्र कश्चित् ?" इति पृच्छत्सु; सदस्यैर्नियुक्तोऽयं वेङ्कटाचार्यस्तां पत्रिकामादाय विलोक्य क्षणादेव तत्र दोषान्प्रदर्श्य कथाऽऽहवे पराक्रमं प्रदर्शयन् प्रतिकथकैरेव विस्मितैः प्रशंसितो दिगन्तविश्रान्तयशोविशोभितोऽभवत् ॥

अथ ब्रह्मविद्याधिगमाय तदुचिताचार्यान्वेषणे प्रवर्तमानः "श्रीशैलाण्णयतातार्य" गुरु-

पादानुपससाद । ये किल कलियुगाद्येकनवत्यधिकाष्टशत्युत्तरचतुःसहस्रसंख्याते साधारणवत्सरे (4891) कटकमृगशीर्षतारकायां (6 August 1790 A. D.) पूर्वनिर्दिष्टशतक्रतुकुमारतातदेशिकपौत्रपौत्रस्य श्रीनिवाससूरेः प्रथमपत्न्यां कनकवल्ल्यां, तात्कालिकतुरुष्ककलापोपप्लवभयेन प्राचीननिर्जनबदरीवन-मध्यशिलातले निलीय निषण्णायां, असहायनिर्विण्णायां, भगवदेकप्रवणान्तःकरणायां बादरायणवदव-तीर्य, भगवतो मधुसूदनस्य जायमानकटाक्षविशेषेण परं निराबाधं ववृधिरे । यांश्च यथावदुपनीय वेदशास्त्रमन्त्रग्रामोपदेशेन पित्रादयोऽनुगृह्णन्तिस्म । यैश्च *श्रीसागरमल्लापुरवेलावनशैलावनिकोलाकृति-देवालयनिर्मानुषधर्मद्रवसरसीतटतुलसीवनसमनुष्ठितपरमाश्चर्यतपश्चर्यापर्यायसपर्यानियमपुरःसरनिजमंत्रपुरश्चरण पूरणसुप्रसन्नप्रत्यक्षतापन्नलक्ष्मीहयवदनकरुणा परिणाहि धिषणा विभवानुगुणवैराग्यशीलगुणवृत्त परिचर्यासंपत्ति विस्मितसुप्रीतवेदान्तविद्याप्रद श्रीवेदान्तरामानुजसंयमिसार्वभौमस्वयंकृतानन्यसामान्य शरणवरणपरवशश्रीरङ्ग-दिव्यदम्पतिसदयापाङ्गवीक्षणविक्षेपसंधुक्षितवेदान्तसंप्रदायप्रवचनकैङ्कर्यसाम्राज्यभारवहनादासेतुहिमाचलं प्रायेण श्रीवैष्णवजगदुज्जीवितमभूत् । येभ्यश्च पित्रार्जिते सत्यपि भ्रात्रे तद्विनरणादत्युत्तमाश्वस्तनवृत्तिरेवारोचिष्ट । येभ्यश्च सामान्यविशेषशास्त्राण्यधिजिगांसवो बहवोऽन्तेवासिनो दिव्यदेशतीर्थयात्राकालेऽपि सहैवासन् । येषाञ्च प्रवचनगोष्ठ्यामपूर्वार्थविशेषग्रहणाय शिष्येभ्योऽन्येऽपि निपुणास्सन्निधाय प्रणिपत्य शृण्वन्तो-ऽवर्तन्त । येषु च प्रवचनमाचरत्सु प्रोक्तानामर्थानां प्रकाशकाः, ब्रह्मशब्दार्थविचार-तत्रतत्रप्रकाशिका श्रीभाष्यटिप्पणी-असन्नेववाक्यार्थनिरूपण-व्युत्पत्तिवादटिप्पण्यर्थसमाजप्रस्तत्वविचारमुखा ग्रन्थाः स्वमुखेन शिष्यमुखेन च प्रादुरभूवन्, तानिमानात्मगुणवतामुपमानभूतानाचार्यचरणानाश्रित्य समधिगतवेदान्त-युगीरहस्यः सोऽयं वेङ्कटाचार्यः, आचार्यभक्तिपरीवाहरूपान् —

शुद्धश्रद्धासमिद्धाशय विलयहयग्रीव सुव्यक्तलीला-
हेषाकोलाहलोर्मि क्षपितकुपितहृत्सर्व दुर्वादिगर्वात् ।
प्राचीनाचार्यवर्यं प्रचयपरिचयानेकतन्त्रस्वतन्त्रात्
प्रख्यातादण्णयार्याद्यदितरगतिमीमांसनं पासनं नः ॥

यतन्ते किन्ते मे तपसि सुदुरन्ते दिविषदां
कथन्ते सिष्णासन्त्यधितटिनि कृष्णादिषु तथा ।
सकृद्ये हृद्येऽस्मिं श्चरणकमलस्यन्दिसलिले
पिपासामासेदुः प्रसभमसमं वाण्णयगुरोः ॥

इत्यादिश्लोकाननुसंदधानः, प्रतिबन्धकतावादशब्दतत्त्वविवेकादि सामान्यशास्त्रग्रन्थान्विरचयन् स्वग्राम एव, श्रीरामानुजाचार्य श्रीसुन्दरवरदाचार्य प्रमुखान्विद्यार्थिनः शास्त्राण्यध्यापयांबभूव ॥

* திருக்கடன்மல்லை. (மகாபலிபுரம்)

अथ श्रीशूणांवेड् जमीन्दार् प्रभुणा अभिज्ञेनाभ्यर्थितः तत्रास्थानविद्वत्पदे स्थापितः तत्र गतागतावलम्बनेन कतिचन हायनान्यनियतमवात्सीत्। तदानीमनेन निर्मिताः प्रबन्धा मुक्तकश्लोका वा प्रायेणाद्य नोपलभ्यन्ते। कदाचित्कस्मिंश्चिदारामे स्तबकभारावनतं कदलीतरुमालोक्य, "अमुं प्रत्येकः श्लोकः कथ्यताम्" इति तेन प्रभुणाभ्यर्थितोऽयं सद्यः कञ्चन श्लोकमकरोत्। स परं तच्छिष्यप्रशिष्यपरंपरया अधुनाप्येवमनुसंधीयते —

"धरित्रि! पुष्पाञ्जलिरेष तुभ्यं सुता मदीयाः परिपालनीयाः"।
इतीव रंभाऽवनताग्रकाया मुमोच बाष्पं मकरन्ददम्भात्॥

इति। एवं तत्स्थानं प्रति विद्यार्थिभिस्सह प्रयाणसमये, अध्वश्रमापनिनीषया पर्यायेणान्तादिक्रमेण श्लोकान्कथयन्नेव गच्छन्, मार्गमध्ये सूर्येऽस्तमिते तमस्युद्भूते पर्जन्ये च वर्षति मार्गानवबोधेन क्षणं परिभ्रमन्, समीपे आजकमेकमालोक्य मार्गं प्रष्टुं तत्पार्श्वमुच्चैरसकृदाह्वयन्नपि प्रत्युक्तिमलभमानस्सदन्तः प्रविश्य तन्मध्ये तालमयेन वर्षत्रेणात्मानमाच्छाद्य गाढमुसमाभीरकमालोक्य यं श्लोकमकथयत् तमप्येवमनुसंदधते —

शिलातलेष्वर्पितजानुपादाङ्गुष्ठद्वयस्तत्र शिरो निधाय।
अशक्यबोधामुपयाति निद्रामाभीरकोऽधःस्रवदग्रनुपूरः॥

इति। अन्यत्किमपि तदानीन्तनं तदीयं वाङ्मयं न ज्ञायते। तत्काल एवास्य निजग्रामस्थितं गृहं तेन प्रभुणा नवीचक्रे। तत्प्रभोः कालानन्तरं तत्र तद्वदभिज्ञाधिपत्यभावात्तत्स्थानगमने पूर्ववदस्य स्वरसप्रवृत्तिर्नासीदिति। तदानीमस्य श्रीवेदान्ताचार्यनामा एकः पुत्रः कन्या चान्येत्यपत्यद्वयमासीत्। अथास्य द्वितीयविवाहः समजनि। [1] मरुत्तान्पाडिग्रामस्था भारद्वाजकुलीना रङ्गनायक्यभिधा अस्य द्वितीयपत्नी। तस्यामस्य पुत्रद्वयं कन्याद्वयञ्चेति चत्वार्यपत्यानि जातानि। तेषां प्रथमः [2] श्रीनृसिंहताताचार्याभिधानः रक्ताक्षिकार्तिकपूर्वफल्गुनीसंभवः (22 November 1864 A. D.)

अथ आरणीनगरीजागीर् श्री तिरुमलरायप्रभोः गीर्वाणभाषाभिज्ञस्याभ्यर्थनया आरणीनगरीं प्राप्तस्सकुटुम्बोऽयं सम्यक्सत्कृतः पञ्चवर्षाधिकं कालं तत्रावसत्। तद्राजाभ्यर्थनानुरोधेन तत्तत्प्रकरणेषु शब्दार्थालङ्कारपरिष्कृतानतिप्रौढान् सरलतमाननेकान्प्रबन्धान् क्षणात्प्रणिनाय। तत्तत्समये तत्तदाकर्णनात् परमसन्तुष्टेन राज्ञा, तत्सभास्थैरन्यैः पण्डितैश्च सुबहु प्रशंसितः तत्कृतमत्युत्तमं सन्मानमलभत। एवं क्रमेण तस्य राज्ञः प्रीतिमात्मनि शतगुणाधिकामवीवृधत्। अथास्य राज्ञि सकुटुम्बजीवनपर्याप्तनदीमातृकभूवितरण-

१. चेङ्गल्पट्टु मण्डलवर्ती कश्चिद्ग्रामः।
२. अस्यैव तनुजन्मानः एते कविचरितलेखका गुरुचरणाः। (सं)

मालोचयति, समतीते च चतुःपञ्चाशे वयसि केनापि कारणेन समुन्मिषता गतसमयवैयर्थ्यचिन्तनेन निर्विण्णमना अयमाचार्यो वेदान्तशास्त्रे प्रौढग्रन्थमेकं रचयितुमारिरिप्सुः, राजदृष्टिदोषेण वा अनुबन्धिजनादृष्टविपर्ययेण वा, जीवन्त्यामेव मातरि अत्यल्पकण्टकवेधरूपव्याजेन भववर्षे तुलाशुक्लचतुर्थ्यां 4975 तमे कलिवर्षे (12 or 13 November 1874 A. D.) परमपदमगात्। तदास्थान्यामवस्थानकाले अनेनाचार्येण याः कृतयो रचिताः तासामेकैव मातृका आरणि जागीर् प्रभुवंश्यैरभिरक्षिता, संप्रति सरस्वती महाल् भाण्डागारे समर्पिता तदध्यक्षैस्संमुद्रय प्रकाशिता सती सहृदयानां विदुषां प्रमोदमधुना विदधाति। तत्र हयग्रीवनक्षत्रमालिका यमकरामायण लक्ष्मीशतकमङ्गलाष्टक कृष्णाष्टककंदर्पदर्पणभाणादयो बहवो ग्रंथाः प्रौढास्सरलाश्च सन्ति। एतेषां ग्रन्थानामधुना प्रकाशनं कुर्वतां सरस्वतीमहाल् ग्रन्थालयाध्यक्षमहाशयानां भगवानायुरारोग्यैश्वर्यप्रदो भूयादित्याशास्यते ॥

इति...............

---

अथ आरणिजागीर्दार् वितीर्णायां मातृकायां लेखनशून्येष्वन्त्येषु पत्रेषु किं लिखितुमुद्दिष्टं स्यादिति समालोचितमस्माभिः। कन्दर्पदर्पणभाणनामकं रूपकमेकं कविवरैरेतैः प्राणायीति च श्रुतवतामस्माकं स एव ग्रन्थोऽत्र लिलेखिषितः, पश्चात्केनापि कारणेन सन्त्यक्तोऽभूदिति मतिरुदभूत्। तस्य च लाभः तद्वंश्येष्वेव संभाव्यत इति निश्चित्य पूर्वोक्तानां प्रबंधृकविवरेण्यपौत्राणां सविधे व्यजिज्ञपाम। तेऽपि संतुष्टमानसाः सद्यः स्ववशे स्थितं तालपत्रात्मकं कन्दर्पदर्पणभाणकोशं प्रदायास्मदनुगृह्णन्। तस्य *प्रत्यादर्शं संपाद्य मातृकां तेभ्य एव प्रत्यदाम। तस्य च पृथगेव पुटसंख्यां परिकल्प्य प्राचीकशाम सहैवाभिः कृतिभिः। परन्तु तालपत्रकोशे मध्ये पत्रद्वयं लुप्तमासीत्। तत्रत्यो ग्रन्थोऽपि तेनैव हेतुना नोपलब्धोऽभूत्। प्रयतमाना अपि वयं न क्वाप्यन्यत्रास्य प्रतिसमाधानोपायमलभामहि। अयं भागोऽपूर्ण एवाद्यापि। (कन्दर्पदर्पणभाणे 35 तमे-पुटे) पश्चात्कुत्रापि यदि लभ्यते कैश्चित्, तैरिदं वैकल्यं विना प्रमादं परिहर्तव्यं लुप्तांशप्रत्यानयनेनेति प्रार्थ्यते ॥

"नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश ॥"

इति संख्यातेषु दशसु रूपकप्रभेदेषु;

"भाणस्तु धूर्तचरित स्वानुभूतं परेण वा।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ॥
संबोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवः ॥

---

* T. M. S. S. M. copied Vol. No. 1368

भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम् ।
मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ॥"

(दशरूपके–तृतीयप्रकाशे–49, 50, 51 श्लोकाः)

इति लक्ष्यमाणस्यास्य भाणाख्यस्य प्रभेदस्य यद्यपि न तथा प्रशस्यतरत्वं, तथापि स्वपोषकप्रभुवरमनोरथ-परिपूरणायैव कविवराणामेषामीदृशी प्रवृत्तिः । कन्दर्पदर्पणभाणोपोद्घातेन तत्रत्य सप्तमश्लोकेन चेदं सुज्ञानम् । सरसतरविशिष्टविद्वज्जनमनोरञ्जनचणकविताररसपरिपोषस्त्वत्र निरवधिकं समुल्लसत्येवेति सहृदयानेवात्र प्रमाणीकुर्महे ॥

चारुतरविचित्ररचनाप्रचुरा अद्सीयकृतीरप्रौढा अपि संस्कृतप्रणयिनो यथाऽवगाहेरन् तथा व्याख्यानमेकमावश्यकमिति मतिरस्माकमासीत् । अस्मदाचार्यपादाः संस्कृताभिवर्धनैकप्रवणाः पण्डित-राजाद्यनेक विरुदालंकृताः श्री उ. वे. डि. टि. ताताचार्यवर्याः सामोदमस्मत्प्रार्थनामुररीकृत्य लक्ष्मीशतकस्य यमकरामायणस्य च व्याख्यानं विलिख्य दत्त्वाऽन्वग्रहीषुः । तदपि मुद्रितमत्र । तेभ्यः सुगृहीतनामधेयेभ्यः, इहैव संस्कृतभाषाभिमानिजनैर्वयं सुबहु धारयामः । यमकरामायणे यस्य कस्यापि श्लोकस्य व्याख्यां पश्यन्तोऽन्तर्वाणिजना गभीरतरदुरूहकवितात्पर्याविष्कारचातुरीमेतेषां विस्मितान्तःकरणा अनुभूय प्रशंसिष्यन्तीति नमितमङ्गैरस्माभिस्तत्र व्याप्रियते ॥

अतिगम्भीरव्याकरणमहोदधितलस्पर्शिनामेतेषां कविवराणामनितरसाधारणीमत्यद्भुतां वाञ्झरीं, गीर्वाणवाणीमालानुभाव्यात्रसवत्तरान् प्रयोगविशेषांश्च सामस्त्येनोद्धृत्य प्रदर्शयितुमशक्तया विस्तरभयाच्च सहृदयमहाशयानेव तत्र प्रमाणीकुर्वन्तो वयं स्थालीपुलाकनीत्या द्वित्रान्प्रयोगान्वर्णनप्रकारविशेषांश्च परं प्रदर्श्य विरमामः ॥

१ हनूमद्दण्डकावसाने २८ पुटे "व्यातत हनुमतं" इति "तनु विस्तारे" इत्यस्य धातोर्लुङन्तप्रयोगः ॥

२ वैशाखोत्सववर्णने सप्तमश्लोके शब्दश्लेषः ॥

३ तत्रैव षोडशश्लोके गरुडगतिवेगतुल्यदीर्घसमासः ॥

४ हयग्रीवनक्षत्रमालिकास्तोत्रे यङ्लुग्यङन्तादि प्रयोगाः ॥

५ तत्रैव १९ श्लोके त्वद्यति इति २२ श्लोके विद्रायते त्वद्यते इति प्रयोगौ ॥

६ तत्रैव २३ श्लोके तीक्ष्णांशवति, भवति इति प्रयोगौ ॥

७ कन्दर्पदर्पणभाणे ११ श्लोके "स बभाण भाणं" इति व्युत्पादनम् ॥

अन्यैः कवयितृभिरचुंबिता वर्णनप्रकाराः कतिचन —

१ कन्दर्पदर्पणभाणे ७-८-९-पुटेषु सूर्योदयवर्णनम् ।

२ तत्रैव मत्तगजवर्णनं, आहितुण्डिकव्यवहारः, कुक्कुटयुद्धम्, वेश्योपाध्यायवृत्तान्तश्च ।

३ तत्रैव ४५-४८ पुटेषु सूर्यास्तमय चन्द्रोदयवर्णनम् ।

४ तत्र-१९० तमः श्लोकः ।

हनूमद्दण्डकः, रघुनन्दनबिरुदावलिश्चेतीदमुभयं रुचिरतरं ; बालैः तथा संगीतव्युत्पत्ति-विशेषभाग्भिश्च स्वपररञ्जनक्षमं मुखस्थतया सदा धार्यञ्च ।

ईदृशे बुधजनभोग्येऽपूर्वनानारसभरभरितसद्ग्रन्थमुद्रापणेऽस्मान्नियुक्तवतां तञ्जापुरसरस्वती-महाल् ग्रन्थालयाक्रीतकार्यदर्शिनां नैसर्गिकमौदार्यं विद्वत्पक्षपातञ्च श्लाघमाना वयं एवंविधनानाग्रन्थ-प्रकाशनादिमुखेन विश्वविख्यातकीर्तयस्ते चिरं विराजन्तामिति प्रार्थयमानाः स्वात्मानं कृतार्थीकुर्महे ।।

ग्रन्थस्यातिप्रौढत्वात्, अस्मन्मतिदौर्बल्यस्य च नैसर्गिकत्वात् भूयांसोऽन्यथाभावा लब्धास्पदा भवेयुः । तत्र संस्कृतप्रणयिनो वाचकमहाशयान् सप्रश्रयं क्षमां याचामहे । कतिपयाशुद्धिप्रख्यापनाय शुद्धिपत्रमप्येकं संयोजितमस्ति । तत्र तत्र प्रचलन्तीषु संस्कृतपाठशालासु, कलाशालासु च अस्य सामस्त्येन वा अंशतो वा पाठ्यतापरिकल्पनेन विद्याप्रदातारो यदि समुत्तेजनं कुर्वन्ति, तदा कवि-वराणामेषामस्मादृशाञ्च परिश्रमः फलवत्तरः स्यात् इति ।।

विद्वज्जनविधेयः,
नावल्पाक्कं श्रीदेवनाथाचार्यः
श्रीसरस्वतीमहाल् संस्कृतपण्डितः ।

सरस्वतीमहाल्, तंजापुरी.
8—2—67

# विषयानुक्रमणिका



20 to 27–पुटानि प्रमादवशादाम्रेडितानि।

॥ श्रीः ॥

# ॥ उच्छृङ्खलवादः ॥

भावनाभाव्यस्वर्गादेर्भावकत्वाद्यजिः कृतौ ।
करणं जैमिनीयानां मतं प्रायोऽतिदुर्घटम् ॥

भावनोक्ता। स्वर्गकामो यजेतेत्यत्र "यागकरणिका भावना" इति शाब्दबोधो मीमांसकानाम् । तत्र भावनाभाव्ययागस्य भावनायां मुख्यं करणत्वं नास्त्येव । किन्तु भावनाभाव्यस्वर्गनिर्वर्तकत्वरूपं पारिभाषिकं करणत्वम् । तत्र स्वर्गनिर्वर्तकत्वं नाम स्वर्गजनकत्वम् । तच्चानन्यथासिद्धत्वे सति स्वर्गसमानाधिकरणात्यन्ताभाव प्रतियोगितानवच्छेदक यागत्वादिरूपं वाच्यम् तच्चासंभाव यागत्वे । तथाहि—यागत्वं गङ्गास्नानादिजन्य स्वर्गसमानाधिकरणाभावप्रतियोगितावच्छेदकम् । तत्रावच्छेदकत्वस्यावच्छिन्न प्रतियोगिताकाभावस्यानतिप्रसक्तस्यासंभवात्, वैजात्यस्य कार्यकारणभावग्रहोत्तरकालकल्प्यस्य प्रागनुपस्थितेश्च ॥

नन्वेतद्दूषणं विधेरिष्टसाधनत्वे शक्तिरिति वदतोर्नैयायिकवेदान्तिनोरेव, न प्रवर्तनाविध्यर्थवादिनां मीमांसकानामिति चेत्; तथा सति इष्टसाधनत्वस्याविध्यर्थत्वे वेदबोधितश्रेयस्साधनतावत्त्वं धर्मत्वमिति भाष्यवार्तिककाराभ्यां प्रागुक्तं धर्मलक्षणं व्याहन्येत । उक्तञ्चेदं तर्कपादे भट्टपादैः 'श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते" इति । अपि च प्रवर्तनापि प्रवृत्त्यनुकूलेष्टसाधनताज्ञानद्वारैव प्रवृत्तिमुत्पादयतीति भवतां सिद्धान्तः । तव चोक्तरीत्या इष्टसाधनत्वस्य बाधे कथं प्रवर्तनया तज्ज्ञानं जननीयम्? अपि चार्थादपि योऽर्थः स शब्दार्थ एव, तात्पर्यविषयीभूतार्थ एव वेदस्य प्रामाण्याभ्युपगमात् । अत एवार्थवादानां प्राशस्त्यांश एव प्रामाण्यम । तथाच कथमिष्टसाधनत्वं वेदार्थो न भवेत्?

किञ्च शक्यस्मृतिजन्योपस्थितिविषयार्थस्य भवन्मते लाक्षणिकत्वात्, तस्य चाशब्दार्थत्वाङ्गीकारे, लाक्षणिकस्य पदानुपस्थितस्य शाब्दे भानानुपपत्तिः, प्रत्ययार्थान्वयानुपपत्तिश्च । पदाध्याहारवादिनस्तव तस्यापदार्थत्वात् ॥

"गौणं लाक्षणिकं वापि वाक्यभेदेन वा पुनः ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्? ॥"

इति स्मृतिपादस्थवार्तिकं वा कथं सङ्गच्छताम्? इष्टसाधनत्ववद्गौणार्थस्यापि त्वदुक्तरीत्या

Saraswathi Mahal Mss. No. J. L. 946/D. 6987.

वेदार्थत्वाभावात्, कथं वा अरुणेतरया सोमक्रयणे अशास्त्रार्थत्वम्? अरुणपिङ्गाक्ष्योरभेदान्वयबोधस्य त्वन्मते शाब्दबोधोत्तरकालिकत्वात्। तस्माद्विधिवाच्यप्रवर्तनाबोधितेष्टसाधनत्वस्यापि विध्यर्थत्वमकामेनापि त्वया स्वीकर्तव्यम्। तत्र चानुपपत्तिः पूर्वमुक्तैवेति ॥

यत्त्वत्र पक्षधरमिश्रैः समाहितं; स्वर्गकामो यजेतेत्यादिना न स्वर्गत्वावच्छेदेन ज्योतिष्टोमसाध्यत्वं बोध्यते, अवच्छेदकत्वांशबोधने तस्यासामर्थ्यादसंभवाच्च, स्वर्गत्वस्य तदजन्यवृत्तित्वेनातिप्रसक्तत्वात्। किन्तु स्वर्गत्वयागजन्यत्वयोः सामानाधिकरण्यमात्रं श्रुत्या बोध्यते। न चात्र व्यभिचारज्ञानं प्रतिबंधकम्, समानप्रकारकं हि व्यभिचारज्ञानं समानप्रकारकाव्यभिचारज्ञानविरोधि। तथाच स्वर्गत्वावच्छेदेन व्यभिचारग्रहात्तदवच्छेदेन नियतपूर्ववृत्तित्वं मा ग्राहि। तदाश्रये धर्मिणि हेतुताग्रहे च न बाधकम्। अथवा व्यभिचारसन्देहोऽत्र न प्रतिबन्धकः। किन्तु योग्यतासंशयपर्यवसन्नत्वेन सोऽत्रानुकूल एव। तादृशवैजात्यसंदेहात्तद्व्यतिरेकनिश्चयश्च नास्त्येव। तथापि कार्यतावच्छेदकाग्रहे कथं कारणता ग्राह्येति चेन्न; सामानाधिकरण्यज्ञानाद्यभावेऽपि शब्दाद्व्याप्तिग्रहवत्फलबलेन तथा स्वीकारात्। अत एव तद्ग्राहकसत्त्वे प्रत्यक्षस्थलेऽपि क्वचित्तदभ्युपेयते, यथा तृणारणिमणिस्थले। अत एव व्याप्यतावच्छेदकाग्रहेऽपि फलबलात् व्याप्तिग्रहो धूमालोकान्यान्यत्वेनोपस्थिते धूमादौ सर्वसिद्धस्सङ्गच्छते। सहचारदर्शनादिव्याप्तिधीसामग्रीसत्त्वे तद्व्यतिरेकेण कार्यव्यतिरेकादर्शनात्। तस्मान्नानुपपत्तिरिति ॥

अन्ये तु जन्यत्वं हि तदवच्छेदकधर्मवत्त्वम्, कथं तदवच्छेदकग्रहं विना ग्राह्यम्? व्यभिचारज्ञानरूपविरोधिनः सत्त्वे तद्ग्रहासंभवाच्च। न च शाब्दे न स दोषः, अयोग्यतानिश्चयरूपस्य प्रतिबंधकताया अनुक्तिसंभावितत्वात्। न च तन्निश्चयो नास्त्येव, संशयश्च न विरोधीत्युक्तमिति वाच्यम्; प्रथमं यागं विनापि गङ्गास्नानात्स्वर्गश्रवणेन तन्निश्चयाभावस्यासंभवात्। तव मते वैजात्यस्यापाततोऽपि पूर्वमनुपस्थितत्वात्। तृणादीनामपि वैजात्योपस्थितौ विजातीयान्वयव्यतिरेकाभ्यां तद्ग्रह इत्याहुः ॥

अथ भावनाभाव्याभिन्नभाव्यस्वर्गकत्वं यागस्य भावनाकरणत्वं वाच्यम्। भाव्यत्वं स्वर्गस्य यागवदन्यावृत्तित्वम्। नच तदपि स्वर्गत्वावच्छेदेन बाधितमिति कथं बोधनीयम्? अधिकरणतावच्छेदकस्य सामानाधिकरण्येनाप्यन्वयबोधसंभवात्। अन्यथा गङ्गायां न मत्स्य इत्यादीनां विलयप्रसङ्गात्। अत एव भट्टाचार्यशिरोमणिभिरपि साध्येष्टकत्वमेव विध्यर्थ इत्युक्तम्। अङ्गीकृतञ्च विद्यावागीशप्रभृतिभिरपि। साध्यत्वञ्च यस्मिन्सत्यग्रिमक्षणे यत्सत्त्वं यद्व्यतिरेके चासत्त्वमित्येवंरूपम्। अत एव दुःखानुत्पादार्थितया प्रायश्चित्तादौ प्रवृत्तिः सङ्गच्छते। इष्टसाधनत्वञ्च शक्यमिति मते च तत्प्राक्कालावस्थायित्वरूपसाधनत्वज्ञानासम्भवात्तत्र प्रवृत्तिर्न

स्यात् । नच साध्यत्वज्ञानस्यैव प्रवर्तकत्वे, साधनत्वज्ञानात्कचिदपि प्रवृत्तिर्न स्यात् इति वाच्यम्; समानसंवित्संवेद्यतया तद्भानादिति चेदत्र वैयाकरणभूषणकाराः —

धूमे रासभव्यभिचारग्रहदशायां रासभवदन्यावृत्तिः कश्चिद्धूमः इति ज्ञानेऽपि प्रवृत्त्यभावस्य सर्वसिद्धत्वेनैतस्याप्रवर्तकत्वात् न विध्यर्थता । किञ्चैवमग्रेऽपि वैजात्यस्य कल्पनं न स्यात्; प्रथमत एव प्रवर्तकज्ञानसिद्धौ तत्र मानाभावात् । नच पूर्वगृहीतकारणता-निर्वाहार्थं तत्कल्पनम् । जातिं विनापि स्वर्गस्य [1]यागजन्यत्वे बाधकाभावात् कारणतास्वरूपे तस्यानुपजीव्यत्वात् । नापि तद्ग्रहे तदुपयोगः, अत्रेव तदभावात् । कारणतावत्कार्यतापि सावच्छिन्नेति व्याप्तिश्चाप्रयोजिका । एवं सति ज्योतिष्टोमादश्वमेधजन्यः स्वर्गः किं न स्यादिति चेत्, कल्पितेऽपि वैजात्ये ज्योतिष्टोमान्तरीयस्तत्रापि किं न स्यात्? स्वभावात् तत्तत्स्वर्गव्यक्तिं प्रति तत्तद्व्यक्तेर्हेतुत्वाद्वेति चेत्तर्हि प्रथमत एव सोऽङ्गीक्रियताम् । किं जात्याव-च्छेदिकया? तस्मात्कार्यतावच्छेदकधर्मस्वरूपं कार्यत्वमित्येव वाच्यम् । तथावच्छेदकाग्रहे दुर्ग्रहमेवेत्याहुः । तस्मान्नेष्टसाधनत्वं साध्येष्टकत्वं वा वक्तुं शक्यमिति चेत् —

अत्र नैयायिकनव्यतमाः — विधेर्विजातीयस्वर्गसाधनत्वादावेव शक्तिः । पूर्वं जाति-मत्त्वादिना विजातीयसुखस्य ग्रहात् जातित्वांशे उद्बोधकाभावाद्वैजात्यप्रकारकस्मृतिरेव लिङादिना जन्यते । विलक्षणतत्प्रकारकस्मृतिहेतोर्विलक्षणविषयताशालिज्ञानस्य तादृशस्मृतिं प्रति हेतुत्वा-कल्पनात् । न चैवं स जातिमानित्यनुभवादपि घट इत्याकारकस्मरणापत्तिः, विलक्षण-विषयताशालिस्मृतिं प्रति तत्तदुद्बोधकस्यैव नियामकत्वात् । न चैवं ज्ञानसंस्कारयोः स्मृतिं प्रति हेतुता मास्तु । अज्ञातवस्तुगोचरस्मरणाभावस्य उद्बोधकाभावादेवोपपत्तेरिति वाच्यम्, इष्टापत्तेः । यद्वा विलक्षणसंस्कारसत्त्वाद्विलक्षणविषयताशालितादृशविलक्षणस्वर्गस्मरणम् । सोऽपि विलक्षणः । कथं? पूर्वोत्पन्नविलक्षणस्मरणात् । तदपि कथम्? तादृशसंस्कारादित्यनादित्वेना-दोषत्वात् । विलक्षणप्रकारताशालिवैजात्यस्मरणस्य प्रकारान्तरेणानिर्वाहात् । अनया रीत्या च मनः-पदादितो विलक्षणप्रकारताशालि मन इति स्मरणम् । यदि च सामान्यतः इष्टसाधनत्वशक्त्यैव उक्तरीत्या निर्वाहे अनन्तशक्तिकल्पने गौरवं विभाव्यते; तदा अस्तु इच्छाविषयतावच्छेदकावच्छिन्नसाधनत्वे शक्तिः । इच्छाविषयत्वावच्छेदकत्वांशे मोषादुक्तरीत्या तथापि विजातीयस्वर्गसाधनत्वस्य स्मृतिसंभवा-दित्याहुः ।

तच्चिन्त्यम्; अस्मत्कृतप्रातस्स्मरणे विचारे तस्य विवरणात् । रामकृष्णभट्टाचार्यास्तु "कंबुग्रीवादिमान् नास्ति" इत्यादौ गुरुधर्मानवच्छेदकत्वपक्षे घटत्वावच्छिन्नप्रतियोगिताया एव

1. "यागजनकत्वे" इति मातृकास्थः पाठः प्रामादिक इति भाति ।

संबंधत्ववदत्रापि विजातीयस्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकत्वसंबंधेन स्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वीयोऽभावः प्रतीयत इति नानुपपत्तिः। अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिश्च नञ्समभिव्याहारस्थल एवेति न तद्विरोध इत्याहुः।

तर्करत्नकृतस्तु; स्वर्गकामपदादुपस्थितस्वर्गत्वमेव ज्योतिष्टोमादेर्जन्यतावच्छेदकम्। न च स्वर्गत्वावच्छिन्नस्य ज्योतिष्टोमरूपकारणाभावादग्निहोत्रादितोऽनुत्पत्त्यापत्तिः, तथाप्युत्पत्तौ च घटादौ रासभवद्व्यभिचारात् ज्योतिष्टोमादेरकारणत्वप्रसंग इति वाच्यम्; व्रीहिभिर्यजेत-यवैर्यजेतेति दर्शपूर्णमासोद्देशेन विहितयोः व्रीहियवयोः परस्परव्यतिरेकेऽपि प्रत्येकं फलजनकत्ववत् परस्परविरहेऽपि कार्योत्पत्तावव्यभिचारवच्चात्रापि तथास्तु। न च तत्रैकशक्तिमत्त्वेनान्यतरत्वादिना वा उभयोर्हेतुता। एवमपि "स्योनं ते सदनं करोमि। घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ। व्रीहीणां मेध सुमनस्यमानः।" इति पुरोडाशसदनसादनप्रकाशकमन्त्रयोर्व्रीहीणां मेधतिमन्त्रलिङ्गाद्व्रीहिप्रयोग एवाङ्गत्वं, नतु यवप्रयोगे इति सिद्धान्तहान्यापत्तेः। तत्रैवापूर्वाख्यकार्यानुत्पत्तिव्यभिचारान्यतरापत्तेः। वैजात्यकल्पनेन विकल्पसमन्तव्यवस्थोपपादने व्रीहिधर्माणां यवेष्वप्राप्तिप्रसङ्गः, ग्रहधर्माणां समार्गादीनां चमसेष्विव। प्रकृतापूर्वलक्षणायां सोमापूर्वमादाय चमससाधारण्यात्, अवान्तरापूर्वस्य ग्रहपदादेवान्तरङ्गतया शीघ्रोपस्थितेः चमसासंग्रहे च व्रीहिपदादपि व्रीहिसाध्यापूर्वविशेषोपस्थित्या यवेषु प्रोक्षणाद्यप्राप्तिर्दुर्वारा। तस्मादेकजातीयापूर्व एव हेतुता। एवं लोके तृणारणिमणीनां वह्नावपि द्रष्टव्यम्।

नचैवं रासभस्यापि घटहेतुतापत्तिः। व्यभिचारात्तत्त्यागे तृणादेरपि तदापत्तिरिति वाच्यम्; रासभस्य हेतुतायां मानाभावात्। यवादेः श्रुत्या, तृणादेररणिमण्यभाववति स्तोमे तृणसत्त्वे वह्निसत्त्वं तृणाभावे वह्न्यनुत्पत्तिरित्यन्वयव्यतिरेकसहकृतात्प्रत्यक्षाच्च हेतुतासिद्धेः। रासभे तु नोभयम्। किन्त्ववश्यकल्प्यदण्डादिभिरन्यथासिद्धिरेवेति न हेतुत्वसंभावनापि। तथापि कारणं विना कार्यासंभवात् व्रीह्यभावे कथं यवेभ्यः कार्यमिति चेत्सत्यम्, व्रीहिभिर्यक्ष्य इति सङ्कल्पापूर्वावच्छिन्नसमयसंबंधस्यैव व्रीहिकार्यतावच्छेदकसंबंधत्वेनादोषात्। तेन संबंधेनाग्नेयापूर्वस्य यवैरनुत्पत्तेः तत्रैव व्रीहीणां हेतुत्वान्न व्यभिचारः। संकल्पापूर्वञ्च फलापूर्वोत्पत्तौ नष्टमिति प्रयोगान्तरे यवादीनामुपादानं नानुपपन्नम्। एवं तृणादेरपि तृणत्वावच्छिन्नसंयोगसंबंधेन वह्नित्वावच्छिन्नं प्रति तादात्म्येन तृणत्वेन हेतुतेत्यादि द्रष्टव्यम्।

एवं सति तृणादिस्थले कार्यतावच्छेदकत्वेन वह्निनिष्ठजातित्रयकल्पनमप्यपास्तम्। मानाभावान्निष्प्रयोजनत्वादन्यथोपपत्तेश्च। अग्निहोत्रादेः स्वर्गे तु अग्निहोत्रजन्यापूर्वविशिष्टरूम-

वाच्यसंबंधेन स्वर्गत्वमवच्छेदकम् । अतः समानजातीय एव स्वर्गोऽग्निहोत्रज्योतिष्टोमादिभ्यो दुर्वार एवेति। श्रूयते च तैत्तिरीयश्रुतौ, "य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति" "य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति" "य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति — इति प्राहुः ।

अपरे तु; मीमांसकमते गङ्गास्नानयागादेरेकशक्तिमत्त्वेन अन्यतमत्वादिना वा स्वर्गत्वावच्छिन्नं प्रति हेतुत्वाभ्युपगमेन नेष्टसाधनताबोधप्रतिबंधः । यद्वा साधनता नानन्यथासिद्धनियतपूर्ववृत्तित्व-रूपा । किन्त्वनन्यथासिद्धत्वविशिष्टपूर्ववृत्तित्वरूपैव । अन्यथासिद्धत्वञ्चावश्यकल्प्यमाननियत-पूर्ववृत्तिन एव कार्यसंभवे तत्सहितत्वम् । यथा-रासभसत्त्वेऽप्यवश्यकल्प्यमानदण्डादिभिरेव घट-संभवेन तत्सहितत्वाद्रासभादिरन्यथासिद्ध इति तद्वारणाय नियतपदं न देयमेव । तथा च यागत्वावच्छिन्नं विना स्वर्गोत्पत्तावपि यागकारणता न बाध्यते, वेदबोधितत्वात्तस्याः । रासभादेस्तु न कारणताबोधकं प्रमाणमित्युक्तम् । कारणताया अतिरिक्तपदार्थत्वे तु न कोऽपि दोषः । अखण्डत्वे लाघवगौरवविचारानापत्तेः । परिचायकमपि तस्या नियमाघटितमेव उक्तलक्षणम् । फलभूमा तु प्रवृत्त्यनुरोधेन कल्प्यत इति सर्वशास्त्रकाराणां पन्थाः । अन्यथा गङ्गास्नानमात्रादेव स्वर्गसिद्धौ, बहु-वित्तव्ययायाससाध्यज्योतिष्टोमादौ प्रवृत्त्यनापत्तेः । उक्ततैत्तिरीयवचनं त्वर्थवादत्वेन नेयम् । अनेकप्रकारको हि भूमा; फलवैजात्यं, व्यक्तिबाहुल्यं बहुकालावस्थायित्वादिरूपो वेत्युक्तं शब्द-मण्यालोकव्याख्याने विद्यावागीशादिभिः ॥

कोण्डभट्टास्तु—फलभूमकल्पनं विनापि बहुवित्तव्ययायाससाध्ये महति कर्मणि यस्यैव न तादृशदुःखे द्वेषः तस्यैवेष्टसाधनताज्ञानात्प्रवृत्तिर्निराबाधैव । अन्यथा तवापि ज्योतिष्टोमेऽत्यन्तालस्य-वतोऽप्रवृत्त्या दोषापत्तेः । वस्तुतः शक्तस्याननुष्ठाने अकीर्तेरुत्पत्तेस्तन्निवृत्त्यर्थं लौकिकप्रतिष्ठारूपाधिक-फलार्थं वा महति प्रवृत्तिर्नानुपपन्ना । अत एव गीतायां,

"अकीर्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥" इति ।

ततस्त्वकीर्तिं धर्मं चेत्यत्र लौकिकप्रतिष्ठादिकं प्रवर्तकत्वेनोक्तम् । अत एव सकलशास्त्रविदां युधिष्ठिरादीनां स्वल्पतरफलकराज्यार्थं गोत्रजब्राम्हणादिहनने प्रवृत्तिरसंगच्छते । तस्मात्प्रतिष्ठा-द्युपाधिवशाज्जायमानोत्कटेच्छैव प्रवृत्तौ प्रयोजिकेति नोक्तदोषः । अत एवाधुनिकानां कर्मा-साङ्गत्वं जानतामपि लौकिकप्रतिष्ठार्थबहुवित्तव्ययायाससाध्ये प्रवृत्तिर्दृश्यते । प्रतिष्ठादौ रागोत्कटत्वा-द्बहुवित्तव्ययायासादौ न द्वेषः । अतस्तदभावान्न प्रवृत्त्यनुपपत्तिः ।

वस्तुतस्तु सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यतः सर्वफलेषु दर्शपूर्णमासयोः प्राप्तेस्तत्रापि पुत्रकामेष्ट्यादीनामानर्थक्यं दुर्वारम्। दर्शपूर्णमासप्रयोगस्य नित्यतया आवश्यकस्य पुत्रादिकामनयैवानुष्ठाने प्रसङ्गान्नित्यसिद्धिसंभवेन प्रवृत्तिलाघवलोभात् पुत्रेष्ट्यादौ प्रवृत्त्यसंभवात्। नन्वेतदर्थमेव पुत्रेष्ट्यादिफले पुत्रे उत्कर्षः कल्प्यते। नचोत्कृष्टस्यापि तस्य 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इति वाक्यात् तस्यापि पुत्राद्यर्थविधानेन तस्मादेव संभवात्पुनरप्रवृत्त्या आनर्थक्यं दुर्वारमिति वाच्यम्; फलत्रैविध्यं प्रकल्प्य मध्यविधफलार्थतया तत्र प्रवृत्त्युपपत्तेः। यद्वा सर्वकामवाक्यं दर्शपूर्णमासयोः काम्यसकलेष्टिमात्रफले, ज्योतिष्टोमस्य च काम्यसोमयागफल एव विनियोगं विधत्त इति न पुत्रेष्ट्यादिफलस्य ज्योतिष्टोमाल्लाभसंभवोऽपि, नवा फलत्रैविध्यकल्पनापीति चेन्न; कृताधानस्य पुत्रादिलोलुपस्य दर्शपूर्णमासात्प्रागपि पुत्रेष्ट्याद्यनुष्ठानसंभवेनानर्थक्यपरिहारे फले वैजात्यकल्पनाया एव गौरवेणासंभवात्। न च दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति वाक्यात्सोमस्य दर्शपूर्णमासोत्तरतायां, इष्ट्यन्तरस्यापि तथात्वे मानमस्ति॥

नन्वस्त्वेवमेत्र। न नः किञ्चिदनिष्टम्। परन्तु तवैव पुत्रेष्ट्याद्यानर्थक्यप्रतिबन्दी लब्धोत्तरेति चेन्न; तथापि समारब्धदर्शपूर्णमासानां काम्येष्टिप्रवृत्तिलोपो दुर्वार इति वदामः। वस्तुतस्तु चित्तवित्तादीनां क्षणिकतामालोच्याव्यवधानेन सोमं, तत्फलं च चिकीर्षोरनग्निकस्याग्निफलकत्वेन काम्यस्याप्याधानस्य न तत्कालप्रतीक्षा। नापि तदापि सोमयागे दर्शोत्तरता प्रतीक्ष्येति "सोमेन यक्ष्यमाणोऽग्नीनादधीत नर्तुं पृच्छेन्न नक्षत्र' मित्यादि श्रुतिप्रामाण्यादित्यग्निष्टोमे सिद्धान्तितम्। तथा चासमारब्धदर्शपूर्णमासस्य स्वर्गोत्कटेच्छावतस्तावत्कालविलंबमसहमानस्य धनिकस्य तत्स्वर्गार्थमेव सोमानुष्ठानस्याप्युपपत्तेरानर्थक्यपरीहारात् दर्शपूर्णमासात्सोमयागे स्वर्गफलभूमकल्पनं कथं सिद्ध्येत्? कालादिविलंबेन स्वल्पवित्तव्ययायासादिलभ्यस्यार्थस्योत्कटशीघ्रलाभेच्छायां बहुवित्तव्ययायासादिभिः संपादनस्य लोके प्रायशः सर्वानुभवसिद्धत्वात्। सर्वश्चादधानः सोमेन यक्ष्यमाणो भवत्येवेति।

अपि च 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति विहितनित्यप्रयोगस्यैव फलसमर्पकं सन्निधानात् स्वर्गकामवाक्यम्। अतो नित्यप्रयोगे न प्रत्यवायाभावः फलं कल्प्यः। प्रत्यवायोपस्थिति तद्द्वेषतत्प्रयुक्ततदभावकामनानां कल्पनामपेक्ष्य स्वर्गेच्छाया एव लाघवेन 'स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात्' इति न्यायाच्च कल्पनौचित्यम्। वस्तुतस्तु फलाधिक्यकल्पनमपि न युक्तम्, मानाभावात् गौरवाच्च। किन्तु समानफलानामपि शक्ताशक्तभेदेन व्यवस्थैवोचिता। अत एव

'सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च।
दद्यादपश्च यश्शक्त्या सर्वे तुल्यफलाः स्मृताः॥'

इति महाभारतवचनं सङ्गच्छते। वित्तशाठ्यं न कारयेदित्यादितत्तदुधृतवाक्यप्रकरणपठितेभ्यः इष्टा चान्यत्रापीयं मर्यादा सर्वेषामपि। न चैवं सोमाभिकारिणामाग्रहात्रऽप्रवृत्त्यापत्तिः। यावज्जीवविधिफलार्थं प्रवृत्त्युपपत्तेरित्याहुः।

इदन्त्ववधेयम्। इष्टसाधनत्वस्य विध्यर्थत्वे, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ तृतीया न स्यात्, करणानभिधान एव तद्विधानादिति चेत्; अत्र विद्यारण्यश्रीपादाः-लिङादिनान्तरङ्गस्वप्रकृतियज्यर्थमात्रगतेष्टसाधनत्वेऽभिहितेऽपि यागविशेषरूपज्योतिष्टोमादिप्रातिपदिकार्थमात्रगतस्यानभिधानेन तृतीया नानुपपन्नेत्याहुः। तन्न ज्योतिष्टोमयज्यर्थयोरभेदेनाभिधानस्यावारणात्। अन्यथा देवदत्तः पचतीत्यत्रापि सामान्यतस्तिङा कर्त्रभिधानेऽपि विशेषरूपेणानभिधानात्कर्तरि तृतीयापत्तेरिति।

यत्त्वनभिहित इत्यस्यानभिहितसंख्याक इत्यर्थः। कर्त्रादेराख्याताावाच्यत्वात्। तथा चात्र संख्यायाः कर्तर्येवान्वयात्तदभिधानेऽपि न करणाभिधानमिति; तन्न। पचनोऽग्निना, पचनी स्थाली इत्यादेः कृदादेर्वारणाय करणतत्संख्यान्यतरानभिधान इति स्वीकारेऽपि प्रकृते संख्यानभिधानेऽपि करणाद्यभिधानात्तृतीयाया दुरुपपादत्वात्। न च कृत्साधारण्यार्थं, यत्र कर्तृविशेष्यको बोधः यत्र वा कर्तृविशेष्यकबोध तात्पर्यं, तत्र कर्ता अभिहित इत्यभ्युपगमात्, अत्रापि करणविशेष्यकबोधे तात्पर्याभावान्न करणाभिधानमिति वाच्यम्; बोधस्य तत्तद्वृत्त्यनुसारित्वेनानियतत्वात्। तात्पर्यस्यापीच्छाविशेषरूपस्य "द्विष्टत्वमिष्टत्वमपत्यवत्स्यं" इति प्रसिद्धेरनुभवाच्चानियतत्वात्। एवं सति शास्त्राप्रामाण्यं सङ्गात्। यत्तु इष्टसाधनत्वस्याभिधानेऽपि साधनस्यानभिधानात् तृतीया नानुपपन्ना तृतीया हि करणाभिधायिनी, न करणत्वाभिधायिनीति वैयाकरणसिद्धान्तात्। तथा च नामार्थप्रकारकाभेदसंसर्गकबोधं प्रति प्रत्ययजन्योपस्थितिर्हेतुर्नतु भेदसंसर्गकबोधं प्रति, कर्तृकरणयोस्तृतीया, कर्मणि द्वितीयेत्याद्यनुशासनविरोधादिति। तन्न — सम्बन्धवाचिषष्ठीस्थले प्रातिपदिकार्थस्य प्रत्ययार्थसम्बन्धे भेदेनान्वयाङ्गीकारादिहापि व्युत्पत्त्यन्तरकल्पनागौरवपरिहारार्थं भेदसम्बन्धाय कर्मत्वादावेव द्वितीयादेश्शक्तिकल्पनात्। न चैन्द्रं दधीत्यादौ तद्धितस्य देवताविशिष्टद्रव्यवाचिनोऽर्थे देवतायां इन्द्रप्रातिपदिकार्थस्येन्द्रस्याभेदे नाप्यन्वयदर्शनाद्व्युत्पत्त्यन्तरस्याप्यावश्यकत्वमिति वाच्यम्; तद्धितस्यापि देवतात्वविशिष्टद्रव्य एव शक्त्यङ्गीकारेण तत्रापीन्द्रस्याधेयतासम्बन्धेनैवान्वयाङ्गीकारात्। नचैवं षष्ठ्यादौ सर्वत्र लाघवाद्धर्मिण्येव शक्तिकल्पनादभेदान्वयेनैव सर्वत्र प्रकृत्यर्थान्वयोऽस्त्विति वाच्यम्; तथात्वे ग्रामाभिन्नो य आश्रयत्ववान् तदाधेयसंयोगजनकं गमनमित्यादिशाब्दबोधापत्तेराश्रयत्वादिकं किन्निरूपितमिति जिज्ञासाया अपरिहार्यत्वात्। अतो न धर्मी कर्मादिरूपोऽर्थः। अपि तु कर्मत्वकरणत्वादिकमेवाखण्डमर्थः। उभयथापि फलस्य व्यापारस्यैव वा निरूपकस्य शाब्दबोध एव

लब्धत्वान्न निरूपकजिज्ञासापत्तिः । करणत्वत्वस्यापि चाखण्डस्यैव शक्यतावच्छेदकत्वस्वीकारान्न गौरवम् । करणत्वादिकमेव च तत्तन्निरूपकभेदेन भिन्नमिति तवैव गौरवम् । अत एव समर्थः पदविधिरिति सूत्रे क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका भवतीति महाभाष्यं सङ्गच्छत इति दिक् ।

यत्तु ज्योतिष्टोमेनेति न करणार्थिका तृतीया, किन्तु "धान्येन धनी" इतिवदभेदार्थिकैवेति, तन्न, लक्षणायां मानाभावात्। दृष्टान्तेऽपि मतुबर्थसम्बन्धस्य धान्यकरणकत्वान्नाभेदलक्षणेत्यवधेयम । तस्मादत्र कथं तृतीया रक्षणीयेति चेत् —

अत्र विवरणाचार्याः — विधिना साधनत्वाभिधानेऽपि तद्विशेषकरणत्वानभिधानान्न तृतीयानुपपत्तिरित्याहुः । अधिकमग्रे निरूपयिष्यत इति दिक् ॥

---

कर्माधिकारो देवानामस्ति नास्तीति पक्षयोः ।
सबलं परिगृह्यातु पक्षं वादी ममाग्रतः ॥
एतत्तत्त्वं गुणिजीवनटीकायां निरूपितम् ।
आद्ययज्ञे वसन्ताप्तिप्रापकं वाक्यमुच्यताम् ।
इति पृष्टाः सवीप्सं तत्प्रवदन्त्यविपश्चितः ॥

'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति तस्मिन् कालविधायकं किं वाक्यमिति पृष्टाः, 'वसन्ते वसन्ते ज्योतिषा यजेते'ति वाक्यमाहुः । ते भ्रान्ताः । अनेन वाक्येन वसन्तस्य निमित्तत्वं बोध्यत इत्याकरे व्यक्तम् । अन्यथा दर्शपूर्णमासनिमित्तस्य यावज्जीवनस्य सौर्यादिष्वतिदेशापत्तिः । अतो नेदं कालविधायकम् । किन्तु 'वसन्ते ज्योतिषा यजेत' इति वाक्यान्तरमेव कालविधायकमिति पञ्चमे भाष्यतन्त्ररत्नादौ स्पष्टम्, इत्यधीतमूलग्रन्था एव विजानन्ति । तथा च तस्यैव कालस्य ज्योतिष्टोमविकृतौ पौरोहित्यफलके बृहस्पतिसवेऽतिदेशो निराबाध इति संक्षेपः ।

विकल्पो व्रीहियवयोर्मतो धर्मविदां सदा ।
तत्र मानं बुधैर्लेख्यं यथाशास्त्रं स्वसर्गतः ॥

तत्र विकल्पे किं प्रमाणम् ? तत् स्वस्वनिश्चयानुसारेण पण्डितैर्लेख्यमिति । तत्र न्यायसुधाकारैर्हेत्वधिकरणे, "समर्थः पदविधिः" इति वैयाकरणपारिभाषया निरपेक्षसाधनत्वं प्रतीयते । तत एव निरपेक्षसाधनत्वं तृतीयार्थ इति मीमांसकानां घण्टाघोषः प्रवर्तितः । तत्रेदं विचार्यते —

निरपेक्षेऽवांशे तृतीयाया नैवानुशासनम्, हेतुमात्रे तृतीयाविधानात्। न चोक्तपरिभाषाबलात्तल्लाभः, तृतीयाविधेः प्रातिपदिकविधित्वेन पदोद्देश्यकविधित्वाभावात्। समासतद्धितपराङ्गवद्भावैकशेष सनादि धातूनामेव पदोद्देश्यकविधित्वेन तत्रैव परिभाषा प्रवर्तत इति वैयाकरणसिद्धान्तात्। न च पदनिष्पादको विधिः पदविधिरित्येव परिभाषार्थोऽस्तु। तथा च स्वादिविधेरपि पदनिष्पादकत्वेन तत्र परिभाषाप्रवृत्तिरक्षतैवेति वाच्यम्; तथा सति "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यनेन स्वरनिष्पादनार्थं विहितस्य परतादात्म्यात्मकस्य पराङ्गवद्भावस्य पदनिष्पादकत्वाभावेन तत्र समर्थपरिभाषाप्रवृत्त्यनापत्त्या तदुत्तरमेतत्सूत्रप्रणयनवैयर्थ्यापत्तेः॥

किञ्च पराङ्गवद्भावे समर्थपरिभाषाप्रवृत्त्यनङ्गीकारे [1]'यत्ते दिवो दुहितर्मर्तभोजनम्' इत्यादौ दिव् शब्दस्य पराङ्गवद्भाववत्, '[2]अयमग्ने जरिता' '[3]ऋतेन मित्रावरुणा वृतावृधावृतस्पृशा' इत्यादौ च अयं ऋतेनेत्यस्य चाग्निमित्रावरुणात्मकतारूपपराङ्गवद्भावः स्यात्। संबोधनप्रथमान्तस्यामन्त्रितस्य अग्निमित्रावरुणादिपदस्य सत्त्वात्। इष्टापत्तौ, 'आमन्त्रितस्य च—आमन्त्रितविभक्त्यन्तस्यादिरुदात्तः स्यात्' इति षाष्ठमाद्युदात्तत्वं स्यात्। इष्यते त्वाष्टमिको निघातोऽनुदात्तत्वम्। तथाहि; अष्टमाध्याये :— 'आमन्त्रितस्य च—पदात्परस्यापादादिस्थस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात्' इत्यनेन सूत्रेण ऋतेनेति पदात्परस्यापादादिस्थस्य मित्रावरुणावित्यामन्त्रितस्य सर्वस्यानुदात्तत्वं सिद्ध्यतीति सिद्धान्तः।

अथ तन्निमित्तग्रहणं कर्तव्यमिति वार्तिकात्, "तस्यामन्त्रितस्य यन्निमित्तं तदेव पराङ्गवत्स्या"दित्यर्थकादामन्त्रितदुहितुर्निमित्तस्य दिव् शब्दस्य पराङ्गवद्भावेऽपि अयं-ऋत-शब्दार्थयोरग्निमित्रावरुणात्मकामन्त्रितनिमित्तत्वाभावादेव न पराङ्गवद्भावापत्तिरिति चेन्नैवम्, एवं सति मित्रावरुणावित्यस्यापि पराङ्गवद्भावानापत्तिः। ऋतस्य वर्धयितारावित्यन्तर्भावितण्यर्थाद्वृधेः क्विपि ऋतावृधाविति रूपम्। तथा च मित्रावरुणावेव वर्धयिताराविति जातम्। तौ च न निमित्तम्। स्वभिन्नत्वादभेदे च कार्यकारणभावायोगात्। न च माभूत्तत्र पराङ्गवद्भावः; तथा सति ऋतावृधावित्यस्य निघतानापत्तिः। द्वितीयपादादित्वेन, तस्यानुदात्तं सर्वमपादादावित्यनेन पर्युदस्तत्वान्नानुदात्तत्वसम्भवः। अन्यथा, "[4]इमं मे गङ्गे" इत्यादित्रयस्येव शुतुद्रीत्यस्यापि स्यात्। तथा च पादादित्वेऽपि पराङ्गवद्भावादामन्त्रितस्येति सूत्रेण षाष्ठाद्युदात्तता ऋतेनेत्यादौ दुर्वारा। न च मित्रावरुणावित्यस्य पराङ्गवद्भावो न सम्भवत्येव। आमन्त्रितं पूर्वमविद्यमानवद्भवतीत्यविद्यमानवद्भावादिति वाच्यम्। परस्य कार्ये त्वसावतिदेशः। पूर्वग्रहणाज्ज्ञापकात्। पराङ्गवद्भावस्तु स्वस्य कार्यम्। ततश्च तन्निमित्तग्रहणे कृते ऋतेनेत्यत्रैव मित्रावरुणावित्यस्यापि स न स्यात्। तस्मात्समर्थपरिभाषयैव तन्निर्वाहमभ्युपेत्य तन्निमित्तग्रहणं त्याज्यमिति वेदभाष्य

1. ऋग्वेदे-7-81-5. c. 2. ऋग्वेदे 10-142-1. a. 3. ऋग्वेदे 1-2-8. 4. ऋग्वेद-10-75-5. a.

शब्दकौस्तुभयोः स्पष्टम्। न चोक्तपराङ्गवद्भावेन मित्रावरुणावित्यस्य पदात्परत्वमेव नास्तीति कथमनुदात्तत्वप्रसक्तिरिति वाच्यम्; सिद्धान्ते पदमुद्दिश्य विहितस्य पराङ्गवद्भावस्य समर्थाश्रितत्वेन प्रकृते ऋतेनेत्यस्य कारकत्वादाशाथे इत्यनेनान्वितस्य मित्रावरुणानन्विततया परस्परान्वययोग्यत्वरूप-व्यपेक्षासामर्थ्यमेक इति सूत्रे भाष्यकारैर्व्यपेक्षालक्षणसामर्थ्यस्याप्युक्तत्वात्। एतादृशसामर्थ्या-स्वीकारे, परशुना वृश्चन्नित्यत्र विशिष्टैकार्थत्वरूपैकार्थीभावरूपसामर्थ्यस्यासम्भवात्पराङ्गवद्भावानापत्तेः। अतस्तदुपपत्तये तदप्याश्रितम्।

नन्वेवमपि मित्रावरुणयोरामन्त्रित ऋतावृधेत्यनेनान्वितयोः पराङ्गवद्भावेन पादादित्वा-भावात्निघातो न संभवतीति चेन्न; न ह्ययं कार्यातिदेशो येन ऋतावृधेत्यस्य कार्यं पादादित्वमतिदिश्यते। किन्तु तादात्म्यस्य। तस्मिंश्चातिदिष्टे विशिष्टमामन्त्रितमिति बुद्ध्या यद्यत्कर्तुं शक्यते तत्तत्कार्यम्। किञ्च कार्यातिदेशोऽपि शास्त्रीयस्यैव कार्यस्यातिदेशो भवति, पादादित्वन्तु न शास्त्रविहितमिति न तदतिदिश्यते। किन्तु स्वरादिरेव शास्त्रीयं कार्यमित्याद्याकरे स्फुटम्। तस्मान्न तृतीयाविधिः पदोद्देश्यकविधिरिति न तत्र समर्थपरिभाषाप्रवृत्तिरिति न निरपेक्षसाधनत्वं व्रीहीणामिति विभावनीयम्।

अस्तु वा कथञ्चित् परिभाषाप्रवृत्तिः तथापि व्रीहीणां यवापेक्षत्वेऽपि परस्परान्वयित्व-रूपव्यपेक्षैकार्थीभावरूपसामर्थ्ययोर्वैयाकरणाभिमतयोरक्षततया न तया यवसमुच्चयव्यावृत्तिरिति। निरपेक्षत्वस्यापि सामर्थ्यपदार्थत्वे समर्थपदस्यावृत्तिलक्षणवाक्यभेदापत्तिः, प्रमाणाभावश्च इति चेदत्राहुः —

व्रीहिभिर्यजेतेत्यत्र यागकरणत्वे व्रीहीणां विशेषणत्वमिति निर्विवादम्। विशेषणत्वञ्च विशेष्यविशेषकत्वं, व्यावर्तकत्वमिति यावत्। तच्च स्वेतरकरणव्यावृत्तिं विना न संभवतीति व्रीहीणां यवसापेक्षत्वे विशिष्टैकार्थत्वरूपैकार्थीभावलक्षणसामर्थ्यानुपपत्त्या तद्धितादिविधेः परिभाषया सामर्थ्य-विधानानुपपत्तिः। अतो निरपेक्षसाधनत्वं व्रीहीणामाश्रीयते। उक्तञ्च रथन्तराधिकरणे वार्तिककारैः —

समासः सति सामर्थ्ये तच्चापीष्टविशेषणे।
विशेषणं व्यवच्छेत्तृ [1] विशेष्यव्यापि चोच्यते॥
समास इति सर्ववृत्तीनामुपलक्षण'मिति॥

यद्यपि ऋयोगव्यावृत्तिरूपनियमफलकत्वेनापि विशेषणत्वोपपत्तिः संभवति, तथापि, व्रीहीणां यागकरणत्वेन विधानात्तत्र चायोगव्यावृत्तिरूपनियमस्य साधनान्तरव्यावृत्तिमन्तरेणा-सिद्धेर्न समुच्चयोपपत्तिरिति संक्षेपः।

---

1. 'ज्यातिष्टामे च नास्ति तद्' इति मुद्रितपुस्तके पाठोदृश्यते।

॥ श्रीः ॥

# ॥ मदनसञ्जीवनभाणः ॥

महाकविघनश्यामकृतः ।

भद्रायास्तु स गेहेषु यद्वाहो गूढतस्करः ।
यत्र नायकनामापि लालसीति विवर्णवत् ॥ १ ॥

अपि च ।

क्षेमायास्तु दिगम्बरस्य वपुषः सौन्दर्यलेशः पुरा
यं दृष्ट्वा किल दारुकावनमुनिस्त्रैणं पुरोऽवर्तत ।
त्रुट्यत्कञ्चुकमस्तकाञ्चि विगलन्नीवि प्रहृष्यन्मुखं
सर्वाङ्गीणनिरूढरोमवितति स्विन्नाङ्गमुत्कम्पनम् ॥ २ ॥

अन्यच्च ।

मोदायास्तु महानटः श्लथजटाजूटं पतत्पन्नगं
भ्रश्यद्गाङ्गजलं गलच्चरु चलच्चन्द्रं रणन्नूपुरम् ।
यस्मिन् भ्राम्यति चक्रवद्भ्रमति स ब्रह्मा वमत्यच्युतो
नाथालं भ्रमणैरितीव मुनयः क्रन्दन्ति मूर्छोत्थिताः ॥ ३ ॥

पुनस्समाधाय ।

यासां धूर्जटिमाथिनस्त्रिजगतीवीरस्य मारस्य दृक्-
कोणा बाणगणा भ्रुवौ च धनुषी पाशा भुजा वल्लयः ।
चक्रे श्रोणितटे च शङ्खनिनदो जैत्रोऽतिकण्ठध्वनि-
स्तासामेव सुधाधिको मृगदृशां बिम्बाधरः पातु वः ॥ ४ ॥

( नान्द्यन्ते सूत्रधारः )

(सविनयं कुसुमाञ्जलिं विकीर्य, पुरोऽवलोक्य सानन्दोल्लासम्)

अनुकूलायत इव विधिरस्मासु। यदिदानीं पुण्डरीकपुरवास्तव्यस्य पुण्डरीकनयनप्रमुखपुङ्खानुपुङ्खरिङ्खदसंख्यनिखिललेखलेखावन्द्यमानास्थानमण्टपस्य भगवतः शिवकामिनीसखस्य कनकसभापतेरार्द्रादर्शनमहोत्सवाय मिलिताः निरन्तरच्छन्दःकाव्यनाटकालङ्कारसङ्गीतसाहितीकलानिरवद्यवैशारद्याः सततमद्वैतविद्यापारदृश्वानः द्वैतवादिमेषपुण्डरीकाः पौण्डरीकप्रभृतिमहाक्रतुकृतः त्रिसन्ध्यमिन्दुशेखरचरणारविन्दपरिचरणनिर्धूतकलिधूजिना रसिकजनाः!! (ससंभ्रमम्, कर्णं दत्वा) किं ब्रूत?

प्रायः पाथसि रोधसीति गदिते ज्ञातक्रियस्तार्किको
वाङ्नाथो ननु शम्भुरित्यभिहिते ख्यातेशविच्छाब्दिकः।
भोजन्पेत्युदितेऽहमुच्यत इति प्रत्युक्तिदश्छान्दसो
जायेतात्र कविश्चमत्कृतिरसव्यंग्यार्थवक्रोक्तिवित् ॥ ५ ॥

अतस्तादृशस्य कवेरेव कृतिः किमपि रूपकमभिनीयतामिति। (विचिन्त्य, सहर्षं) कश्चिदस्ति भवादृशानसूयरसिकमानसानन्दनगुणगणगर्भितो मदनसञ्जीवनो नाम भाणः, तमहं प्रयुञ्जानोऽनुरञ्जयाम्यार्यमिश्रान् ॥

(नेपथ्ये) कस्तस्य कविः?

सूत्र०— (सहर्षं) श्रूयतां समासतो निवेदयामि।

यस्येशोऽग्रभवः पिता किल महादेवस्स काशी प्रसूः
साधुः श्रेयसि सुन्दरी प्रियतमा शाकम्भरी च स्वसा।
सप्ताष्टोक्तिलिपिप्रभुर्गुणनिधिश्चौण्डाजिबालाजिस-
त्पौत्रोऽयं विभुरब्दविंशतिमितश्चौण्डाजिपन्तः कविः ॥ ६ ॥

(पुनर्नेपथ्ये)

किं युद्धकाण्डनाम्नः चम्पुकाव्यस्य प्रणेता घनश्यामकविः?

सूत्र०— (आकर्ण्य, सस्मितम्) अथ किम्। (ससंभ्रमम् आकाशे लक्ष्यं बद्ध्वा) किं ब्रूथ? किमेष कविरिति। (सभ्रूभङ्गम्)

द्वित्रश्लोककृतां वराः कुकवयः प्रत्यालयं चुल्लिवत्
द्वित्रास्सन्तु भवन्ति हन्त कवयः किं तावता ते खलाः ।
सद्वालोऽपि विषाणवानपि चतुष्पादोऽप्यनुश्रोप्यति-
स्थूलोऽपि प्रबलोत्कटोऽपि महिषः किं जायते कुञ्जरः ॥ ७ ॥

[पुनस्तत्रैव] किं ब्रूथ ? क्षम्यताम् ।

द्वयोरपि निबन्धनयोः किमेष एव कविरित्याशयेन पृष्टो भरतपुत्र इति । [सस्मितं, हस्ततिर्यक्प्रचारमभिनीय]

[आकाशे] हरदत्त ! किमात्थ ?

यदालिर्यद्ध्याते पदमचिरमन्वेति शतश-
स्त्वतः प्राचीं वीचीं मधुजलधिवीचीततिरिव ।
घनश्यामो यावत्पठति स सभायां निजकृतिं
घनश्यामं तावत्कुकविमुखकोशं जनयति ॥ ८ ॥

साधु युक्तमुक्तम् । गुणग्राहिभाव एव महानुभावतासूचकः । [आकर्ण्य] भो भोस्सामाजिकाः ! रसिकजनाः !! [सौत्सुक्यं] किं ब्रूथ ? किं पुनः पुनर्विलम्ब्यते भवता । सत्वरमेतदेव रूपकं निरूप्यतामिति । [सश्लाघम्]

दिष्ट्या दृष्ट इहैष तोषणगुणः सर्वे गुणग्राहिणः
यूयं, व्याघ्रपुरी पुरी विभुरपि श्रीचित्सभेशो नटः ।
फुल्लन्नीरजसौरभीमधुघटीनिद्रापितद्वीपिज-
द्राक्षातादृशमाधुरीचहचरी वाचां कवेर्वैखरी ॥ ९ ॥

किं बहुना —

एकेनाह्ना कृतं तेन मयैकेन प्रयुज्यते ।
तदेकेन हृदा यूयं तरङ्गयत रूपकम् ॥ १० ॥

[परिवृत्यावलोक्य]

क एष पिशाचाविष्ट इव सर्वतो दत्तदृष्टिरित एवाभिवर्तते ? आः ज्ञातम् । अस्मद्भागिनेयो भृङ्गिरिटिभट्टगोपालकन्यया चित्रलेखया सह नूतनोपजातसम्पर्कविरहस्य कुलभूषणस्य

भूमिकामादाय रङ्गमण्डपमभिपतति । तन्न साम्प्रतमिह स्थातुम् । वयमपि तत्तत्पात्रानुसन्धानाय सज्जीभवाम । [ इति निष्क्रान्तः ]

## प्रस्तावना

[ ततः प्रविशति कुलभूषणः ]

कुलभूषणः — ( सविमर्शं चिन्तामभिनीय दार्घमुष्णं च निश्वस्य अधिफालं तर्जनीं तिलकयन् ) अये ! भवितव्यतैव बलवती !! यतः किल ;

कृच्छ्राल्लब्धा प्रेयसी हन्त कान्तिं दर्शंदर्शं क्षिप्तवानस्मि कालम् ।
प्राप्तः पापः कश्चिदत्रान्तरे सा लीना गेहे क्वापि विद्युल्लतेव ॥ ११ ॥

( मन्दं परिक्रम्य )

श्रुतिसुखवचनामुदारवृत्तां ललितपदां सुखदां रसोर्मिलां च ।
रुचिररुचिमुदितशोभशय्यां कविरिव कवितां विचिन्तयामि ॥ १२ ॥

( विहस्य )

नाहूतो निकटे तयाहमथवा नालिङ्गितो नाधरम्
विम्बस्निग्धमवापितो , ललितया साशं न पीतो दृशा ।
यान्त्या वेश्म भयेन केवलमहं दृष्टो निवृत्याञ्जसा
तस्यामेव तथाविधोऽपि ममतासारो यथा मे भवेत् ॥ १३ ॥

( पञ्चषपदानि गत्वा )

आरूढाधरतर्जनीस्मितसमेतास्यं कुचप्रौढता-
शीर्यत्कञ्चुकमालिमन्थरगतं मुग्धाक्षिकोणेक्षणम् ।
चक्षुर्गोचरपीवरोरुविचलत्कौसुम्भसूक्ष्माम्बरं
किं जीवस्य रसायनं मम पुनः पश्यामि तस्या वपुः ॥ १४ ॥

( साकूतम् )

नितम्बभरगौरवं प्रचलदूरुरम्भायुगं
विनिर्दयनिपीडनत्रुटितहारमुक्तासरम् ।

मुहुर्भुजमतल्लिकानिधुवनक्वणत्कङ्कणं
कदा नु खलु साधयाम्यहह! तत्परिष्वंजनम् ॥ १५ ॥

उन्निद्रस्तनमुदितस्मितं सकम्पं
सप्रेमोद्धृतचुबुकं निमीलिताक्षम् ।
सानन्दं घनपुलकं ससीत्कृतं किं
चुम्बेयं तदधरबिम्बमम्बुजाक्ष्याः ॥ १६ ॥

(सोल्लासम्)

नृत्यद्वेणि चलद्भुजं दरगलन्माल्यं विलोलालकं
प्रस्विन्नालिकमीषदुन्नतगलं मञ्जुध्वनन्मेखलम् ।
वल्गन्निःश्वसितं वलत्कटि चलापाङ्गं विगूढस्मितं
विश्लिष्यत्तिलकं तरङ्गितकुचं लप्स्ये नु वीरायितम् ॥ १७ ॥

(किञ्चिदुपसृत्य) हन्त! प्रभातप्रायेव विभावरी । यदिदानीम्—

पुत्राः के दयिता च का जनयिता कः कस्य माता च का
त्राता कस्य च कस्तदेतदखिलं हन्तेन्द्रजालोपमम् ।
संमार्गे जलधिस्तमः किल निशा मायाविलं विष्टपं
साधो! जागृहि जागृहीति रणति श्रीकण्ठघण्टामणिः ॥ १८ ॥

चित्सभेशमहिम्नाऽत्र वासिनस्सर्वजन्तवः ।
चन्द्रचूडास्स्युरित्येव ताम्रचूडा रटन्ति किम् ॥ १९ ॥

किञ्च

जातो नाम वियोगिनां वदनजच्छायाधरश्चन्द्रमाः
चेतश्चन्दनबुद्बुदाकृतिमती नक्षत्रमालाऽजनि ।
शुक्रोऽप्येष ऋषिव्रजेन लभते दीपस्य दीनां दशां
आकाशो जलदैर्दधाति विचलद्भृङ्गस्य सिन्धोः श्रियम् ॥ २० ॥

(पुरतोऽवलोक्य)

हृत्वा केलिभिरेव वित्तमखिलं कौपीनमात्रांशुकान्
कृत्वा तान्धनिकान्क्रमेण महतस्स्तुत्वा च नत्वा हसन् ।

आस्वाद्योर्वरितं दधन्निशि करे ताम्बूलमुच्चावचं
वारं वारमयं प्रयाति वसतिं वाराङ्गनानां गणः ॥ २१ ॥

अपि च

वेदानेव पठन्कथंचन महत्संपाद्य भैक्षं, मुदा
दत्वा नक्तमिदं क्षणं कुगणिकां भुक्त्वा च तद्रोगभाक् ।
द्राग्निर्यच्छद्मावहन् शिवशिवेत्याच्छादयन्वेदना-
मायात्येष दरिद्रषिद्गनिकरो वेश्याभिषङ्मन्दिरात् ॥ २२ ॥

(घ्राणमाकृष्य) अमीषां गन्धोऽपि सांक्रामिकं रोगमुत्पादयति । महान्तस्तदेते दूरतः परिहरणीयाः । (तथा कुर्वन्नवलोक्य)

उदयाशङ्किनो भीतास्स्नाताः केप्याहिताग्नयः ।
आर्द्रवस्त्राः प्लुतैरेव पलायन्ते मृगा इव ॥ २३ ॥

(पदान्तरे स्थित्वा सकौतुकम्) सफलमद्य नयनद्वयम्!

भस्मोद्धूलितविग्रहा धृतमहारुद्राक्षमालास्सर-
स्तीरप्रान्ततले ब्रुसीमधिगताश्शुद्धत्रयीपावनाः ।
होमार्थाहृतपुष्पदर्भसमिधस्तीर्थाष्टकस्नायिनो
विप्राः केचिदुशन्ति भास्करमुपस्थानाय कोका इव ॥ २४ ॥

(पुरोऽवलोक्य)

मन्देहान्दलयन्नभो विशदयन्प्राचीं दिशं शोणयन्
कोकान्संघटयन्सरो विमलयन्विप्रौघमुत्थापयन् ।
जीमूताननुरञ्जयन्तिलकयन्काकान्समुद्बोधयन्
आशां प्रोज्ज्वलयन्विटान्कलुषयन्कश्चिज्जरीजृम्भते ॥ २५ ॥

(सविनयादरम्)

भक्तेभ्यो मम यश्शुचं विरचयेदल्पं तमेवं मुहुः
कुर्यां प्रागिति सूचयन्निव तमो यो हन्ति गाढं दृढम् ।
यस्साकं नमतां मनांसि नलिनैरानन्दयत्यञ्जसा
तस्मै वन्दनमस्तु पापदलने शूराय सूराय नः ॥ २६ ॥

(इति शिरस्यञ्जलिं बद्ध्वा त्रिचतुरपदानि गत्वा, स्पर्शमभिनीय)

दृप्यत्केरलभीरुगर्भकरणं कुप्यन्मनोमानिनी-
मानग्रन्थिविमोक्षसाधितमणिर्मारस्य मुख्यायुधम् ।
मल्लयन्तर्मकरन्दविन्दुलुलितः पद्माटवीसौरभ-
स्तैयामन्दतरस्समीरणशिशुर्मन्दं परिस्पन्दते ॥ २७ ॥

(पार्श्वतोऽवलोक्य, सखेदौत्सुक्यम्)

हन्त! तिरश्चामपि तटाके विलासातिशयः ।

(निपुणं निर्वर्ण्य, साश्चर्यं)

कोकीतुण्डे वितरति बिसं खण्डितार्धं स कोकः
चञ्चच्चञ्च्वा शिरसि रमणं हन्त! कण्डूयते सा ।
तत्काले च स्वपिति पतगः पारवश्यात्तदङ्के
शङ्के कामस्सुखयतितरामन्तरा मां त्रिलोकीम् ॥ २८ ॥

(पुनरन्यतोऽवलोक्य)

अये! लभ्यत एव नयननिर्वाणम् । तथाहि—

किञ्चित्कुङ्कुमशालिगण्डफलका रिक्ता ललाटे करे
वल्गत्केशचया विलोलसिचया साकूतमालापिनी ।
कक्षे वक्षसि मुग्धपीनमसृणं कुम्भत्रयं बिभ्रती
कापि द्राविडकन्यकाततिरियं कासारमासेवते ॥ २९ ॥

(सोल्लासम्) भवतु तावदासां पश्येयमत्र कृत्यम् ।

(तथा कृत्वा, शिरस्यञ्जलिं बद्ध्वा)

त्यक्त्वाद्य नश्चलसुदूरमतीव कान्ताः
निघ्नन्ति किञ्चिदवलम्ब्य शिलासु चेलम् ।
बन्दीभवाम्यनिलवाहि सुतूर्णमुच्चैः
कन्दर्पमन्दिरविलोकमहामहाय ॥ ३० ॥

(निपुणं निर्वर्ण्य) इहैव मज्जयन्नुपतिष्ठे । यतः—

